॥ श्रीरामो जयति ॥

# ॥ नवग्रहदशाभुक्तिदोषपरिहारः ॥

अथ उमासंहिताप्रोक्तः श्रीमद्रामायणस्थघट्टपारायणाधीन नवग्रहदशाभुक्तिपीडापरिहारप्रकारः कथ्यते—

ईश्वर उवाच—

अथ वक्ष्यामि दोषाणां दशाभुक्तिषु पार्वति ।
नवग्रहैः कारितानां परिहारं यथोदितम् ॥१॥
ब्रह्मा तदात्मजाश्चापि शक्राद्याश्च सुरोत्तमाः ।
रामायणस्थघट्टानां केषां चित् पाठमात्रतः ॥
पीडां नवग्रहकृतामुत्तेरुः कृपया प्रभोः ॥२½॥

॥ अथ सूर्यदशादोषपरिहारः ॥

दुष्टा दशा चेत् सूर्यस्य नियमात् पूतमानसः ।
(1) हरेण गङ्गाधरणसर्गं नित्यं पठेद्विजः ॥३½॥
सूर्यस्यैव दशायां तु सूर्यभुक्तिस्तु दोषदा ।
(2) हरेण कालकूटस्य भक्षणं यत्र सर्गके ॥
तं पठेत् प्रातरैकाग्रयात् ध्यात्वा रुद्रं परात्परम् ॥५॥
चन्द्रभुक्तिर्यदा क्रूरा सूर्यस्यैव दशान्तरे ।

---

(1) बालकाण्डे 43 सर्गः ।
(2) बालकाण्डे 45 सर्गः ।

पठे (3) च्छूर्पणखाभङ्गसर्गं त्रिषवणं यतः ॥६॥
कुजभुक्तिर्दोषदा चेत् सूर्यस्य च दशान्तरे ।
(4) आदावयोध्याकाण्डस्य पठेत् सर्गद्वयं व्रती ॥७॥
बुधस्य यदिचेत् भुक्तिः क्रूरा सूर्यदशान्तरे ।
(5) अधिकं मेनिरे विष्णुमिति सर्गं सदा पठेत् ॥८॥
गुरोर्भुक्तिर्दोषदा चेत् आदित्यस्य दशान्तरे ।
(6) सरामो रथमास्थायेत्यादिसर्गं पठेन्मुदा ॥९॥
शुक्रभुक्तिक्रौर्यदोषशान्त्यर्थं भास्करान्तरे ।
(7) सीतोक्तस्वविवाहाख्यसर्गं सर्वात्मना पठेत् ॥१०॥
शनिभुक्तिर्यदि क्रूरा दशायां भास्करस्य च ।
(8) इन्द्रजिद्वधसर्गन्तु पठेच्च शृणुयादपि ॥११॥
राहोश्चेद्दोषदा भुक्तिः दिनरश्मेर्दशान्तरे ।
(9) देवेभ्यः पार्वतीशापसर्गन्तु प्रयतः पठेत् ॥१२॥
केतुभुक्तिस्तु दुष्टा चेद्दशायां तु रवेस्तदा ।

---

(3) आरण्यकाण्डे 18 सर्गः ।
(4) अयोध्याकाण्डे 1 2 सर्गौ ।
(5) बालकाण्डे 75 सर्गः ।
(6) अयोध्याकाण्डे 17 सर्गः ।
(7) अयोध्याकाण्डे 118 सर्गः ।
(8) युद्धकाण्डे 91 सर्गः ।
(9) बालकाण्डे 36 सर्गः ।

(10) जटायुषे मोक्षदानसर्गं भक्तियुतः पठेत् ॥१३॥

॥ इति सूर्यदशादोषपरिहारः ॥



॥ अथ चन्द्रदशादोषपरिहारः ॥

सोमस्य चेद्दशा दुष्टा तस्याश्शान्त्यर्थमादरात् ।
(11) "ततस्समध्यङ्गत" मित्यमुं सर्गं पठेन्निशि ॥१४॥
शुक्लपक्षे * प्रदोषेच्च ततश्चन्द्रं प्रपूजयेत् ।
अशुभा सोमभुक्तिश्चेत् सोमस्यैव दशान्तरे ॥
(12) नृगस्य चरितं कृत्स्नं पठेदुत्तरकाण्डगम् ॥१५½॥
सूर्यभुक्तिर्यदाक्रूरा प्राप्य सोमस्य वै दशाम् ।
(13) हनूद्रामसम्बन्धसर्गं भक्त्या च वाचयेत् ॥१६½॥
भौमस्य भुक्त्या दोषश्चेत् निशाकरदशान्तरे ।
(14) विश्वामित्रेण नयनं पठेद्राघवयोर्मुदे ॥१७½॥
सौम्यभुक्ति रसौम्या चेत् सोमस्यैव दशान्तरे ।
(15) सीताराघवसंवादसर्गान् मध्यन्दिने पठेत् ॥१८½॥

---

(10) आरण्यकाण्डे 68 सर्गः ।

(11) सुन्दरकाण्डे 5 सर्गः ।

(*) प्रदोषः—सूर्यस्यास्तमयात् परं घटिकाद्वयम् ।

(12) उत्तरश्रीरामायणे 53 54 सर्गौ ।

(13) किष्किन्धाकाण्डे 3 सर्गः ।

(14) बालकाण्डे 19 20 21 22 सर्गाः ।

(15) अयोध्याकाण्डे 26 27 28 29 30 सर्गाः ।

चन्द्रस्यैव दशायान्तु गुरुभुक्तिर्यदाऽशुभा ।
(16) नारदोक्तां रामकथां पूतात्मा प्रयतः पठेत् ॥१९ $\frac{1}{2}$॥
शुक्रस्यान्तर्दशा दुष्टा यदि सोमदशान्तरे ।
(17) उत्थानसर्गं वह्नेस्तु सीताया भक्तितः पठेत् ॥
शनैश्चरस्य दुष्टा चेत् भुक्तिश्चन्द्रदशान्तरे ।
सायं प्रातः पठेत् सर्गं नित्यं (18) खरवधात्मकम् ॥
राहुभुक्तिर्दोषदा चेत् चन्द्रस्य तु दशान्तरे ।
(19) अहल्याशापनिर्मोक्षसर्गं भक्त्याऽत्र संपठेत् ॥
महादशायां सोमस्य केतोश्चेत् भुक्तिरक्षमा ।
(20) रक्षोवधप्रतिज्ञाख्यं पठेत्सर्गं प्रयत्नतः ॥२३ $\frac{1}{2}$॥

॥ इति चन्द्रदशादोषपरिहारः ॥



## ॥ अथ कुजदशादोषपरिहारः ॥

कुजस्य चेद्दशा दुष्टा (21) कुमारोत्पत्तिसर्गकौ ।
पठेद्वा शृणुयाद्वाऽपि सुब्रह्मण्यार्पिताशयः ॥

---

(16) बालकाण्डे प्रथमस्सर्गः ।
(17) युद्धकाण्डे 121 सर्गः ।
(18) आरण्यकाण्डे 30 सर्गः ।
(19) बालकाण्डे 49 सर्गः
(20) आरण्यकाण्डे 6 सर्गः ।
(21) बालकाण्डे 36 37 सर्गौ ।

पठनान्ते च वल्लीशं पूजयेदालयेऽपि वा ॥२५॥
महादशायां भौमस्य तस्यैवान्तर्दशाऽशुभा ।
(22) अगस्त्यपूजां रामाय पठेदुत्तरकाण्डगाम् ॥२६॥
भौमस्यैव दशाभागे सूर्यभुक्तिश्शुभा न चेत् ।
(23) कन्दर्पनाशनाख्यं तु पठेत् सर्गमनुत्तमम् ॥२७॥
महादशायां भौमस्य सोमभुक्तिर्नचेच्छुभा ।
(24) वानरोत्पत्तिसर्गं तु भक्तियुक्तस्तदा पठेत् ॥२८॥
बुधभुक्तिर्दोषदा चेत् कुजस्यैव दशान्तरे ।
(25) पायसस्य प्रदानाख्यं पठेत्सर्गं प्रयत्नतः ॥२९॥
गुरोश्चेद्दोषदाभुक्तिर्भौमस्य तु दशान्तरे ।
(26) उपदेशं हनुमतो रावणाय तदा पठेत् ॥३०॥
शुक्रभुक्तिर्दोषदा चेत् लोहिताङ्गदशान्तरे ।
(27) सीतायाः प्रार्थनं वह्निमुद्दिश्य हनुमत्कृते ।
यत्र तं सर्गमाध्यायन्नाञ्जनेयं पठेत्क्रमात् ॥३१½॥
सौरेरन्तर्दशा क्रूरा यदि भौमदशान्तरे ।

---

(22) उत्तरश्रीरामायणे 76 सर्गः ।

(23) बालकाण्डे 23 सर्गः ।

(24) बालकाण्डे 17 सर्गः ।

(25) बालकाण्डे 16 सर्गः ।

(26) सुन्दरकाण्डे 51 सर्गः ।

(27) सुन्दरकाण्डे 53 सर्गः ।

(28) कबन्धबाहुलवनसर्गं ध्यायन्शनिं पठेत् ॥३२½॥
अङ्गारकदशायां तु राहोरन्तर्दशाऽशुभा ।
(29) पठेत्तु प्रथमे युद्धे रावणस्य पराभवम् ॥३३½॥
केतुभुक्तिर्दोषदा चे दङ्गारकदशान्तरे ।
सीताकृतां (30) राक्षसीनां रक्षां हनुमतः पठेत् ॥३४½॥

॥ इति कुजदशादोषपरिहारः ॥

॥ अथ राहुदशादोषपरिहारः ॥

दशा चेत्तमसो दुष्टा कपिभिः कृतमादरात् ।
(31) लङ्कादहनसर्गं तु युद्धकाण्डगतं पठेत् ॥३५½॥
अन्ते तु ज्वालामालिन्यै पूजां कृत्वाऽथ यत्नतः ।
निवेदयेदपूपांश्च माध्वीकं च निवेदयेत् ॥ ३६½ ॥
तत्रैव राहुभुक्तिश्चेत् दोषदा तत्प्रशान्तये ।
(32) नागास्त्रबन्धनिर्मोक्षसर्गं भक्त्या युतः पठेत्॥३७½॥
राहोर्दशायां सूर्यस्य पीडाचेद्भुक्तितो भवेत् ।
बालकाण्डगतं (33) सूर्यवंशाख्यानं यतः पठेत्॥३८½॥

---

(28) आरण्यकाण्डे 70 सर्गः ।

(29) युद्धकाण्डे 59 सर्गः ।

(30) युद्धकाण्डे 116 सर्गः ।

(31) युद्धकाण्डे 75 सर्गः ।

(32) युद्धकाण्डे 50 सर्गः ।

(33) बालकाण्डे 70 सर्गः ।

चन्द्रभुक्तिर्दोषदा चेत् राहोरेव दशान्तरे ।
(३ ) नर्मदायां रावणस्य पूजासर्गं यतः पठेत् ॥३९½॥
राहोर्दशायां भौमस्य भुक्त्या चेद्दुरितं भवेत् ।
(35) पठेत् कैलासचलने रावणस्य च रोदनम् ॥४०½॥
बुधस्य भुक्त्या दोषश्चेत् तमसस्तु दशान्तरे ।
(36) पठेत् ब्रह्मकृतं स्तोत्रं रावणस्य वधात्परम् ॥४१½॥
राहोर्दशायां भुक्त्या चेत् सुरेज्यस्याशुभं भवेत् ।
(37) सर्गं राज्याभिषेकाख्यं सुग्रीवस्य सदा पठेत् ॥
कवेर्भुक्तिरनर्थं चेद्राहोर्दत्ते दशान्तरे ।
(38) हनूमता राघवाय चूडामण्यर्पणं पठेत् ॥४३½॥
शनैश्चरस्य भुक्त्या चेद्दोषो राहुदशान्तरे ।
(3 ) हनूमताऽक्षनाशाख्यसर्गपारायणं चरेत् ॥४४½॥
केतोरन्तर्दशा दुष्टा राहोश्चेत्स्याद्दशान्तरे ।
(40) रामेण जामदग्न्यस्य लोकानां नाशनं पठेत् ॥४५½॥

॥ इति राहुदशादोषपरिहारः ॥

---

(34) उत्तरश्रीरामायणे 31 सर्गः ।
(35) उत्तरश्रीरामायणे 76 सर्गः ।
(36) युद्धकाण्डे 120 सर्गः ।
(37) किष्किन्धाकाण्डे 26 सर्गः ।
(38) सुन्दरकाण्डे 65 सर्गः ।
(39) सुन्दरकाण्डे 47 सर्गः ।
(40) बालकाण्डे 76 सर्गः ।

## ॥ अथ गुरुदशादोषपरिहारः ॥

गुरोर्दशा चेदुग्रा स्यात् तदा सुन्दरकाण्डके ।
(41) पठेत्समुद्रतरणसर्गमेकं हनूमतः ॥
अन्ते च सितया मिश्रान्लाजान् हनुमतेऽर्पयेत् ॥४७॥
गुरोर्दशायां तस्यैव भुक्तिश्चेद्दोषदा भवेत् ।
पठेत्तु (42) शरभङ्गस्य मोक्षसर्गं द्विसन्ध्ययोः ॥४८॥
गुरोर्दशायां सूर्यस्य भुक्तिश्चेद्दोषभाविनी ।
(43) सुग्रीवोक्तं कबराणां पूर्वदिङ्मार्गमापठेत् ॥४९॥
गुरोर्दशायां चन्द्रस्य भुक्तिर्यदि विपत्तिदा ।
(44) संपातिपक्षस्योत्पत्तिकथासर्गान् पठेत् सुधीः॥५०॥
गुरोर्महादशायां तु कुजभुक्तिर्यदाऽशुभा ।
(45) अयोध्यावर्णनं बालकाण्डस्थं सर्गमापठेत् ॥५१॥
गुरोर्दशायां सौम्यस्य भुक्तिर्यदि विपत्प्रदा ।
(46) देवानां प्रार्थनासर्गौ विष्णुं प्रति यतः पठेत् ॥५२॥
गुरोर्दशायां शुक्रस्य भुक्तिश्चेद्दोषदा तदा ।

---

(41) सुन्दरकाण्डे प्रथमस्सर्गः ।
(42) आरण्यकाण्डे 5 सर्गः ।
(43) किष्किन्धाकाण्डे 40 सर्गः ।
(44) किष्किन्धाकाण्डे 60 61 62 63 सर्गाः ।
(45) बालकाण्डे 5 सर्गः ।
(46) बालकाण्डे 15 16 सर्गौ ।

(47) बालकाण्डान्तिमं सर्गं पठेद्भक्तिसमन्वितः ॥५३॥
शनिभुक्तिर्दोषदा चेत् सुरेज्यस्य दशान्तरे ।
(48) सुमन्त्रस्यानुग्रहार्थं पठेद्रामस्य दर्शनम् ॥५४॥
राहुभुक्तिर्दोषदा चेत् गुरोरेव दशान्तरे ।
(49) शबरीमोक्षसर्गन्तु पठेद्भक्तिसमन्वितः ॥५५॥
केतुभुक्त्या भवेत् पीडा गुरोर्यदि दशान्तरे ।
(50) पठेन्मधुवनध्वंसे सर्गद्वयमनुत्तमम् ॥५६॥

॥ इति गुरुदशादोषपरिहारः ॥

---

॥ अथ शनिदशादोषपरिहारः ॥

शनैश्चरस्य दुष्टा चेद्दशा राक्षसनाशनम् ।
(51) विश्वामित्राध्वरे सर्गं पठेत् पूर्वं तु भोजनात् ॥
पाठकाले भवेन्मौनी शृणुयादपि तादृशः ।
मृत्युञ्जयाय पाठान्ते तिलान्नं विनिवेदयेत् ॥५८॥
शनेर्दशायां भुक्तिश्चेत् शनेरेवाहिता भवेत् ।
(52) ब्रह्मास्त्रबन्धमुक्त्याख्यं पठेत् सर्गं हनूमतः ॥५९॥

---

(47) बालकाण्डे 77 सर्गः ।
(48) अयोध्याकाण्डे 16 सर्गः ।
(49) आरण्यकाण्डे 74 सर्गः ।
(50) सुन्दरकाण्डे 61, 62 सर्गौ ।
(51) बालकाण्डे 31 सर्गः ।
(52) सुन्दरकाण्डे 48 सर्गः ।

शनैश्चरदशायान्तु सूर्यभुक्तिर्यदाऽशुभा ।
(53) हनुमज्जननं सर्गं किष्किन्धाकाण्डगं पठेत् ॥६०॥
चन्द्रभुक्तिर्दोषदा चेत् शनैश्चरदशान्तरे ।
(54) ताटकावधसर्गन्तु पठेदादोषनाशनम् ॥ ६१॥
भौमस्य भुक्तिश्चेत्क्रूरा शनेरेव यदा दशा ।
(55) स्वयंप्रभाबिलोत्तारसर्गपारायणं चरेत् ॥६२॥
शनेर्दशायां सौम्यस्य भुक्तिश्चेत्क्लेशदायिनी ।
(56) लङ्कादाहं हनुमता कृतं सर्गं सदा पठेत् ॥६३॥
महादशायां सौरस्य गुरुभुक्तिस्तु दोषदा ।
(57) रामालिङ्गनसर्गन्तु पठेद्दासहनूमतः ॥६४॥
शनेर्दशायां शुक्रस्य भुक्तिर्यदि विपत्प्रदा ।
(58) चूडामणिप्रदानाख्यं पठेत् सर्गं हनूमते ॥६५॥
राहोश्चेत् भुक्तिरशुभा सौरस्याथ दशान्तरे ।
(59) मायामृगवधाभिख्यं पठेत् सर्गं प्रयत्नतः ॥६६॥

---

(53 किष्किन्धाकाण्डे 66 सर्गः ।

(54) बालकाण्डे 26 सर्गः ।

(55) किष्किन्धाकाण्डे 51, 52 सर्गौ ।

(56) सुन्दरकाण्डे 54 सर्गः ।

(57) युद्धकाण्डे प्रथमस्सर्गः ।

(58) सुन्दरकाण्डे 38 सर्गः ।

(59 आरण्यकाण्डे 44 सर्गः ।

केतुभुक्तिरनर्थं चेद्दत्ते शनिदशान्तरे ।
(60) सीताभरणजालानां सुग्रीवेणार्पणं पठेत् ॥६७॥

॥ इति शनिदशादोषपरिहारः ॥

---

॥ अथ बुधदशादोषपरिहारः ॥

दशा बुधस्य दुष्टा चेत् सीताग्रे हनुमत्कृतम् ।
(61) श्रीरामवर्णनं सर्गं पठेत् संपूज्य राघवम् ॥
पठनान्ते राघवस्य मुद्गान्नं विनिवेदयेत् ॥ ६८½ ॥
बुधभुक्तिस्तु तत्रैव यदि दोषप्रदा भवेत् ।
(62) वामनोत्पत्तिचरितसर्गं प्रातः पठेच्चतुः* ॥ ६९½ ॥
बुधस्य तु दशायां चेत् सूर्यभुक्तिस्तु दोषदा ।
(63) तदा मूलबलध्वंससर्गं त्रिषवणं पठेत् ॥ ७०½ ॥
महादशायां सौम्यस्य चन्द्रस्यान्तर्दशाऽशुभा ।
(64) संवादमत्रे रामेण सर्गन्तु प्रयतः पठेत् ॥ ७१½ ॥
बुधस्य चेद्दशायां तु भौमभुक्तिस्तु पीडयेत् ।

---

(60) किष्किन्धाकाण्डे 6 सर्गः ।

(61) सुन्दरकाण्डे 35 सर्गः ।

(62) बालकाण्डे 29 सर्गः ।

(*) चतुः— 4 Times.

(63) युद्धकाण्डे 94 सर्गः ।

(64) अयोध्याकाण्डे 117 सर्गः ।

(65) सीताशुभनिमित्ताख्यसर्गं षड्वारमापठेत् ॥
अशुभा गुरुभुक्ति श्चेत् बुधस्यैव दशान्तरे ।
(66) सर्गं पठेत्तु सुरभे राख्यानं भरतोदितम् ॥ ७३½ ॥
बुधस्यैव दशायान्तु शुक्रभुक्तिर्यदाऽहिता ।
(67) सीताराघवसंवादं पठेदारण्यकाण्डगम् ॥ ७४½ ॥
शनिभुक्तिर्दोषदा चेत् बुधस्य तु दशान्तरे ।
स्मरन् मनसि कोदण्डपाणिं राघवमादरात् ।
पठेत् सर्गं भक्तियुतो (68) रावणस्य वधात्मकम् ॥७६॥
महादशायां सौम्यस्य राहुभुक्तिस्तु दोषदा ।
(69) चारेण तु दशास्याय राघवस्य प्रदर्शनम् ।
सर्गमेकं पठेद्भक्तः ग्रन्थे संपूज्य राघवम् ॥ ७७½ ॥
केतुभुक्तिर्दोषदा चेत् बुधस्याथ दशान्तरे ।
(70) हनूमताऽशोकवने सीताऽन्वेषणमापठेत् ॥ ७८½ ॥

॥ इति बुधदशादोषपरिहारः ॥

---

(65) सुन्दरकाण्डे 29 सर्गः ।
(66) अयोध्याकाण्डे 74 सर्गः ।
(67) आरण्यकाण्डे 9, 10 सर्गौ ।
(68) युद्धकाण्डे 111 सर्गः ।
(69) युद्धकाण्डे 28 सर्गः ।
(70) सुन्दरकाण्डे 14 सर्गः ।

॥ अथ केतुदशादोषपरिहारः ॥

केतोर्दशा दोषदा चेत् (71) सर्गं गुहसमागमम् ।
राघवस्य पठेद्भक्त्या हृदि कृत्वा रघूत्तमम् ॥
अन्ते निवेदयेद्रस्यान् माषापूपान् घृताचितान् ॥८०॥
केतोर्दशायां केतोश्चेत् भुक्तिर्दोषविधायिनी ।
(72) दैवप्रशंसां रामस्य मुखाब्जान्निस्सृतां पठेत् ॥
केतोर्दशायां सूर्यस्य भुक्तिश्चेत् क्लेशकारिणी ।
पठेदयोध्याकाण्डस्थं (73) सूर्यवंशानुकीर्तनम् ॥८२॥
केतोर्दशायां सोमस्य दुष्टात्वन्तर्दशा यदि ।
(74) बलातिबलयोर्दानं राघवाय पठेद्यतः ॥ ८३ ॥
केतोर्दशायां भौमस्य यदि भुक्त्याऽहितं भवेत् ।
(75) कच्चित्सर्गं पठेत्सम्यक् हृदि ध्यायन् रघूत्तमम् ॥
केतोर्दशायां भुक्तिस्तु बुधस्य यदि दोषदा ।
(76) पठेद्रामकथां प्रोक्तां भरताय हनूमता ॥ ८५ ॥
गुरुभुक्तिर्दोषदात्री केतोश्चेत्तु दशान्तरे ।

---

(71) अयोध्याकाण्डे 50 सर्गः ।
(72) अयोध्याकाण्डे 32 सर्गः ।
(73) अयोध्याकाण्डे 110 सर्गः ।
(74) बालकाण्डे 22 सर्गः ।
(75) अयोध्याकाण्डे 100 सर्गः ।
(76) युद्धकाण्डे 129 सर्गः ।

(77) हनूमदुक्तं सीतायै रामस्य विजयं पठेत् ॥८६॥
शुक्रभुक्त्या तु दोषश्चेत् केतोरेव दशान्तरे ।
(78) हनूमदुक्तं रामाय सीतादर्शन मापठेत् ॥८७॥
महादशायां केतोश्चेत् शनिभुक्तिरनर्थदा ।
पठेत् त्रिसन्ध्यं प्रयतः (79) प्रहस्तवधसर्गकम् ॥८८॥
केतोर्महादशायान्तु राहुभुक्तिरनर्थदा ।
(80) कुम्भकर्णस्य निधनं पठेत् सर्गं दिवानिशम् ॥८९॥
॥ इति केतुदशादोषपरिहारः ॥

---

॥ अथ शुक्रदशादोषपरिहारः ॥
शुक्रस्य चेद्दशा दुष्टा (81) सीतोद्वाहाख्यसर्गकम् ।
जानकीं मनसा ध्यायन् सर्वाभरणभूषिताम् ॥९०॥
पठेत् कुङ्कुमगन्धाद्यैरभ्यर्च्य ग्रन्थसत्तमम् ।
सुवासिनीभ्यः पाठान्ते मल्लिकाजातिमालतीः ॥९१॥
श्वेतपुष्पाणि चान्यानि चन्दनं कुङ्कुमं तथा ।
ताम्बूलं च यथाशक्ति दद्याद्रजतदक्षिणाम् ॥९२॥

---

(77) युद्धकाण्डे 116 सर्गः ।
(78) सुन्दरकाण्डे 65 सर्गः ।
(79) युद्धकाण्डे 58 सर्गः ।
(80) युद्धकाण्डे 67 सर्गः ।
(81) बालकाण्डे 73 सर्गः ।

तत्रैव शुक्रभुक्तिश्चेत् प्राणिनां दोषकारिणी ।
(82) अङ्गुळीयप्रदानस्य सर्गं सुन्दरकाण्डगम् ।
पठेत् त्रिषवणं भक्त्या पूजयित्वा महीसुताम् ॥ ९३½ ॥
सा चेत् भुक्तिर्दोषदा स्यात् स्त्रीणां तत्रैव काण्डके ।
(83) सीताया आञ्जनेयेन संवादस्य तु सर्गकम् ।
शृणुयुस्ता अर्थतश्च शब्दतश्च द्विजाननात् ॥ ९५ ॥
भार्गवस्य दशायां तु सूर्यभुक्तिर्यदाऽशुभा ।
पठे (84) च्छिवधनुर्भङ्गसर्गमत्यन्तमादृतः ॥ ९६ ॥
महादशायां शुक्रस्य चन्द्रभुक्तिस्तु दोषदा ।
पठेच्चन्द्रोदये शुक्लपक्षे पश्यन् सुधाकरम् ।
(85) इळोपाख्यानसर्गांस्तु ध्यात्वाऽम्बां चन्द्रमण्डले ॥
कवेर्दशायां भौमस्य यदि भुक्तिः प्रपीडयेत् ।
(86) राज्याभिषेकसर्गं तु पठेत् पादुकयोः प्रभोः ॥
बुधभुक्तिर्दोषदा चेच्छुक्रस्यैव दशान्तरे ।
(87) माल्यवन्मालिविजयं पठेत्सर्गत्रयं यतः ॥ ९९½ ॥

---

(82) सुन्दरकाण्डे 36 सर्गः ।
(83) सुन्दरकाण्डे 33 सर्गः ।
(84) बालकाण्डे 67 सर्गः ।
(85) उत्तरश्रीरामायणे 87, 88, 89, 90 सर्गाः ।
(86) अयोध्याकाण्डे 115 सर्गः ।
(87) उत्तरश्रीरामायणे 6, 7, 8 सर्गाः ।

गुरुभुक्तिः पीडिका चेत् शुक्रस्य तु दशान्तरे ।
(88) पठेद्दशरथस्याश्वमेधसर्गं प्रयत्नतः ॥ १००½ ॥

महादशायां शुक्रस्य मन्दस्यान्तर्दशाऽशुभा ।
(89) ओषधिक्ष्माभृदायत्तलक्ष्मणोज्जीवनं पठेत् ॥

शुक्रस्य चेद्दशायान्तु राहुभुक्तिस्तु दोषदा ।
(90) श्वभ्रक्षेपं विराधस्य सर्गमादरतः पठेत् ॥ १०२½ ॥

शुक्रस्य तु दशायां तु केतुभुक्तिर्यदाऽशुभा ।
(91) सिन्धुतीरे राघवस्य शयनं दर्भसंस्तरे ।
पठेदासेतुबन्धान्तमन्ते नीराजयेत् प्रभुम् ॥ १०४ ॥

॥ इति शुक्रदशादोषपरिहारः ॥

---

॥ अथोपसंहारः ॥

एवं नवग्रहाणां तु दशाश्चान्तर्दशाः प्रिये ।
उद्दिश्य परिहारोऽयं कथितस्ते सुमध्यमे ॥ १०५ ॥
प्रियं रवेरिक्षुखण्डं चन्द्रस्य तु पयः प्रियम् ।
भौमप्रियं पायसं स्यात् बुधोद्राक्षाफलप्रियः ॥ १०६ ॥
गुरोः प्रिया तु कदळी रसखण्डं कवेः प्रियम् ।

---

(88) बालकाण्डे 14 सर्गः ।

(89) युद्धकाण्डे 102 सर्गः ।

(90) आरण्यकाण्डे 4 सर्गः ।

(91) युद्धकाण्डे 20 सर्गः ।

ब्र

जम्बूफलैश्शनिप्रीतिः राहुर्नित्यं मधुप्रियः ॥ १०७ ॥
केतोः प्रियं नारिकेळ मेतानि विनिवेदयेत् ।
दशानां दोषशान्त्यर्थं पाठ्ये रामायणांशके ॥ १०८ ॥
तत्तत् ग्रहप्रीतिकरं पदार्थं विनिवेदयेत् ।
रामायणांशे पठिते भुक्तिदोषप्रशान्तये ॥ १०९ ॥
दशानाथप्रियं त्वादौ भुक्तिनाथस्य चान्ततः ।
निवेदयेत्प्रियं वस्तु यत्नात्संपाद्य सादरम् ॥ ११० ॥
अलभ्यं यदि किञ्चित्स्यात् अन्यद्यत् किञ्चिदुत्तमम् ।
निवेदयेत् भक्तियुतः तदभावे नवं फलम् ॥ १११ ॥
नारिकेळं तथा द्राक्षा कदल्याश्च फलोत्तमम् ।
सर्वग्रहाणां प्रीत्यै स्यात् अलाभे तन्निवेदयेत् ॥ ११२ ॥
एवं दशाभुक्तिजन्यदोषाणां परिशान्तये ।
रामायणांशकाः प्रोक्ताः श्रवणाद्भुक्तिमुक्तिदाः ॥

इत्युमासंहितायां नवग्रहदशाभुक्तिदोषपरिहारकथनं
॥ समाप्तम् ॥

---

॥ श्रीरामो जयति ॥

## ॥ श्रीरामचन्द्रमूर्तिप्रतिष्ठाविधिः ॥

( रामपटलगतः )

ब्रह्मोवाच—

मूर्तिं श्रीरामचन्द्रस्य हेमरूप्यादिभिः कृताम् ।
लिखितां यन्त्रतो वाऽपि चित्ररूपामथापि वा ॥